**चाण्डालौ**—आअच्छ ले चालुदत्ता आअच्छ । इमं घोषणट्ठाणम् । आहणेध डिण्डिमम् । घोशेध घोशणम् । (आगच्छ रे चारुदत्त, आगच्छ । इदं घोषणस्थानम् । आहत डिण्डिमम् । घोषयत घोषणाम् ।)

**उभौ**—शुणाध अज्जा, शुणाध । एशे शत्थवाहविणअदत्तश्श णत्थिके शाअलदत्तश्श पुत्तके अज्जचालुदत्ते णाम । एदिणा किल अकज्जकालिणा गणिआ वशन्तशेणा अत्थकल्लवत्तश्श कालणादो शुण्णं पुप्फकलण्डअजिण्णुज्जाणं पवेशिअ बाहुपाशवल्लक्कालेण मालिदे त्ति एशे शलोत्ते गहिदे, शअं अ पडिवण्णे । तदो लण्णा पालएण अम्हे आण्णत्ता एदं मालेदुम् । जदि अवले ईदिशं उभअलोअविलुद्धं अकज्जं कलेदि तं पि लाआ पालए एव्वं ज्जेव शाशदि (शृणुतार्याः, शृणुत । एष सार्थवाहविनयदत्तस्य नप्ता सागरदत्तस्य पुत्रक आर्यचारुदत्तो नाम । एतेन किलाकार्यकारिणा गणिका वसन्तसेनार्थकल्यवर्तस्य कारणाच्छून्यं पुष्पकरण्डकजीर्णोद्यानं प्रवेश्य बाहुपाशबलात्कारेण मारितेति एष सलोप्त्रो गृहीतः, स्वयं च प्रतिपन्नः । ततो राज्ञा पालकेन वयमाज्ञप्ता एतं मारयितुम् । यद्यपर ईदृशमुभयलोकविरुद्धमकार्यं करोति तमपि राजा पालक एवमेव शास्ति ।)

**चारुदत्तः**—(सनिर्वेदं स्वगतम् ।)

मखशतपरिपूतं गोत्रमुद्भासितं मे
सदसि निबिडचैत्यब्रह्मघोषैः पुरस्तात् ।
मम मरणदशायां वर्तमानस्य पापै-
स्तदसदृशमनुष्यैर्घुष्यते घोषणायाम् ॥ १२ ॥

(उद्वीक्ष्य कर्णौ पिधाय ।) हा प्रिये वसन्तसेने,

शशिविमलमयूखशुभ्रदन्ति सुरुचिरविद्रुमसन्निभाधरौष्ठि ।
तव वदनभवामृतं निपीय कथमवशो ह्ययशोविषं पिबामि ॥ १३ ॥

**उभौ**—ओशलध अज्जा ओशलध ।

एशो गुणलअणणिही शज्जणदुक्खाण उत्तलणशेदू ।
अशुवण्णं मण्डणअं अवणीअदि अज्ज णअलीदो ॥ १४ ॥

अण्णं च ।

शव्वे क्खु होइ लोए लोए शुहशंठिदाण तत्तिल्लः ।
विणिवाडिदाण णलाणं पिअकाली दुल्लहो होदि ॥ १५ ॥

(अपसरतार्याः, अपसरत ।

एष गुणरत्ननिधिः सज्जनदुःखानामुत्तरणसेतुः ।
असुवर्णं मण्डनकमपनीयतेऽद्य नगरीतः ॥

अन्यच्च ।

सर्वः खलु भवति लोके लोकः सुखसंस्थितानां चिन्तायुक्तः ।
विनिपतितानां नराणां प्रियकारी दुर्लभो भवति ॥ )

**चारुदत्तः**—( सर्वतोऽवलोक्य । )

अमी हि वस्त्रान्तनिरुद्धवक्त्राः प्रयान्ति मे दूरतरं वयस्याः ।
परोऽपि बन्धुः समसंस्थितस्य मित्रं न कश्चिद्विषमास्थितस्य ॥ १६ ॥

**चाण्डालौ**—ओशालणं किदम् । विवित्तं लाअमग्गम् । ता आणेध एदं दिण्णवज्झचिण्हम् । ( अपसारणं कृतम् । विविक्तो राजमार्गः । तदानयतैनं दत्तवध्य-चिह्नम् । )

( चारुदत्तो निःश्वस्य 'मैत्रेय भोः किमिदमद्य' (९।२९) इत्यादि पठति । )

( नेपथ्ये । )

हा ताद, हा पिअवअस्स । ( हा तात, हा प्रियवयस्य । )

**चारुदत्तः**—( आकर्ण्य सकरुणम् । ) भोः स्वजातिमहत्तर, इच्छाम्यहं भवतः सकाशात्प्रतिग्रहं कर्तुम् ।

**चाण्डालौ**—किं अम्हाणं हत्थादो पडिग्गहं कलेशि । ( किमस्माकं हस्तात्प्रतिग्रहं करोषि । )

**चारुदत्तः**—शान्तं पापम् । नापरीक्ष्यकारी दुराचारः पालक इव चाण्डालः । तत्परलोकार्थं पुत्रमुखं द्रष्टुमभ्यर्थये ।

**चाण्डालौ**—एव्वं कलीअदु । ( एवं क्रियताम् । )

( नेपथ्ये । )

हा ताद, हा आवुक । ( हा तात, हा पितः । )

( चारुदत्तः श्रुत्वा सकरुणम् 'भोः स्वजातिमहत्तर' ( १६५ पृष्ठे ) इत्यादि पठति । )

**चाण्डालौ**—अले पउला, खणं अन्तलं देध । एशे अज्जचालुदत्ते पुत्तमुहं पेक्खदु । ( नेपथ्याभिमुखम् । ) अज्ज, इदो इदो । आअच्छ ले दालआ, आअच्छ । ( हे पौराः, क्षणमन्तरं दत्त । एष आर्यचारुदत्तः पुत्रमुखं पश्यतु । आर्य, इत इतः । आगच्छ रे दारक, आगच्छ । )

( ततः प्रविशति दारकमादाय विदूषकः । )

**विदूषकः**—तुवरदु तुवरदु भद्दमुहो । पिदा दे मारिदुं णीअदि । ( त्वरतां त्वरतां भद्रमुखः । पिता ते मारयितुं नीयते । )

**दारकः**—हा ताद, हा आवुक। (हा तात, हा पितः।)

**विदूषकः**—हा पिअवअस्स, कहिं मए तुमं पेक्खिदव्वो। (हा प्रियवयस्य, कुत्र मया त्वं द्रष्टव्यः।)

**चारुदत्तः**—(पुत्रं मित्रं च वीक्ष्य।) हा पुत्र, हा मैत्रेय। (सकरुणम्।) भोः, कष्टम्।

चिरं खलु भविष्यामि परलोके पिपासितः।
अत्यल्पमिदमस्माकं निवापोदकभोजनम् ॥ १७॥

किं पुत्राय प्रयच्छामि। [आत्मानमवलोक्य। यज्ञोपवीतं दृष्ट्वा।] आं, इदं तावदस्ति मम च।

अमौक्तिकमसौवर्णं ब्राह्मणानां विभूषणम्।
देवतानां पितॄणां च भागो येन प्रदीयते ॥ १८॥

[इति यज्ञोपवीतं ददाति।]

**चाण्डालः**—आअच्छ ले चालुदत्ता, आअच्छ। (आगच्छ रे चारुदत्त, आगच्छ।)

**द्वितीयः**—अले, अज्जचालुदत्तं णिलुववदेण णामेण आलवेशि। अले, पेक्ख।

अब्भुदए अवशाणे तहे अ लत्तिंदिवं अहदमग्गा।
उद्दामे व्व किशोली णिअदी क्खु पडिच्छिदुं जादि ॥१९॥

अण्णं च।

शुक्खा वि वदेशा शे किं विणमिअमत्थएण काअव्वम्।
लाहुगहिदे वि चन्दे ण वन्दणीए जणपदश्श ॥ २० ॥

(अरे, आर्यचारुदत्तं निरुपपदेन नाम्नालपसि। अरे, पश्य।
अभ्युदयेऽवसाने तथैव रात्रिंदिवमहतमार्गा।
उद्दामेव किशोरी नियतिः खलु प्रतीष्टुं याति ॥
अन्यच्च।
शुष्का व्यपदेशा अस्य किं विनमितमस्तकेन कर्तव्यम्।
राहुगृहीतोऽपि चन्द्रो न वन्दनीयो जनपदस्य ॥)

**दारकः**—अरे रे चाण्डाला, कहिं मे आवुकं णेध। (अरे रे चाण्डालाः, कुत्र मम पितरं नयत।)

**चारुदत्तः**—वत्स,

अंसेन बिभ्रत्करवीरमालां स्कन्धेन शूलं हृदयेन शोकम् ।

आघातमद्याहमनुप्रयामि शामित्रमालब्धुमिवाध्वरेऽजः ॥ २१ ॥

**चाण्डालः**—दालआ,

ण हु अम्हे चाण्डाला चाण्डालकुलम्मि जादपुव्वा वि ।

जे अहिभवन्ति शाहुं ते पावा ते अ चाण्डाला ॥ २२ ॥ ( दारक, )

( न खलु वयं चाण्डालाश्चाण्डालकुले जातपूर्वा अपि ।

येऽभिभवन्ति साधुं ते पापास्ते च चाण्डालाः ॥ )

**दारकः**—ता कीस मारेध आवुकम् । ( तत्किमर्थं मारयत पितरम् । )

**चाण्डालः**—दीहाओ, अत्त लाअणिओओ क्खु अवलज्झदि, ण क्खु अम्हे । ( दीर्घायुः, अत्र राजनियोगः खल्वपराध्यति, न खलु वयम् । )

**दारकः**—वावादेध मम् । मुञ्चध आवुकम् । ( व्यापादयत माम् ! मुञ्चत पितरम् । )

**चाण्डालः**—दीहाओ, एव्वं भणन्ते चिलं मे जीव । ( दीर्घायुः, एवं भणंश्चिरं मे जीव । )

**चारुदत्तः**—( सास्रं पुत्रं कण्ठे गृहीत्वा । )

इदं तत्स्नेहसर्वस्वं सममाढ्यदरिद्रयोः ।

अचन्दनमनौशीरं हृदयस्यानुलेपनम् ॥ २३ ॥

( 'अंसेन बिभ्रत्–' ( १०।२१ ) इत्यादि पुनः पठति । अवलोक्य स्वगतम् । 'अमी हि वस्त्रान्तनिरुद्धवक्त्राः' ( १०।१६ ) इत्यादि पुनः पठति । )

**विदूषकः**—भो भद्दमुहा, मुञ्चध पिअवअस्सं चारुदत्तम् । मं वावादेध । ( भो भद्रमुखाः, मुञ्चत प्रियवयस्यं चारुदत्तम् । मां व्यापादयत । )

**चारुदत्तः**—शान्तं पापम् ( दृष्ट्वा स्वगतम् । ) अद्यावगच्छामि । ( समसंस्थित–' ( १०।१६ ) इत्यादि पठति । प्रकाशम् । 'एताः पुनर्हर्म्यगताः स्त्रियो माम्' ( १०।११ ) इत्यादि पुनः पठति । )

**चाण्डालः**—ओशलध अज्जा, ओशलध ।

किं पेक्खध शप्पुलिशं अजशवशेण प्पणट्ठजीवाशम् ।

कूवे खण्डिदपाशं कञ्चणकलशं व्वि डुब्बन्तम् ॥ २४ ॥

( अपसरतार्याः, अपसरत ।

किं पश्यत सत्पुरुषमयशोवशेन प्रनष्टजीवाशम् ।

कूपे खण्डितपाशं काञ्चनकलशमिव मज्जन्तम् ॥ )

( चारुदत्तः सकरुणम् 'शशिविमलमयूख–' ( १०।१३ ) इत्यादि पठति । )

**अपरः**—अले, पुणोवि घोशेहि । ( अरे, पुनरपि घोषय । )

( चाण्डालस्तथा करोति । )

**चारुदत्तः**—

प्राप्तोऽहं व्यसनकृतां दशामनार्यां
यत्रेदं फलमपि जीवितावसानम् ।
एषा च व्यथयति घोषणा मनो मे
श्रोतव्यं यदिदमसौ मया हतेति ॥ २५ ॥

( ततः प्रविशति प्रासादस्थो बद्धः स्थावरकः । )

**स्थावरकः**—( घोषणामाकर्ण्य सवैक्लव्यम् । ) कधं अपावे चालुदत्ते वावादीअदि । हग्गे णिअलेण शामिणा बन्धिदे । भोदु । आक्कन्दामि । शुणाध अज्जा, शुणाध । अत्थि दाणिं मए पावेण पवहणपडिवत्तेण पुप्फकलण्डअजिण्णुज्जाणं वसन्तशेणा णीदा । तदो मम शामिणा मं ण कामेशत्ति कदुअ बाहुपाशबलक्कालेण मालिदा, ण उण एदिणा अज्जेण । कधम् । विदूलदाए ण को वि शुणादि । ता किं कलेमि । अत्ताणअं पाडेमि । ( विचिन्त्य । ) जइ एव्वं कलेमि, तदा अज्जचालुदत्ते ण वावादीअदि । भोदु । इमादो पाशादबालग्गपदोलिकादो एदिणा जिण्णगवक्खेण अत्ताणअं णिक्खिवामि । वलं हग्गे उवलदे, ण उण एशे कुलपुत्तविहगाणं वाशपादवे अज्जचालुदत्ते । एव्वं जइ विवज्जामि लद्धे मए पललोए । ( इत्यात्मानं पातयित्वा । ) ही ही । ण उवलदम्हि । भग्गे मे दण्डलिअले । ता चाण्डालघोशं शमण्णेशामि । ( दृष्ट्वोपसृत्य । ) हंहो चाण्डाला, अन्तलं अन्तलम् । ( कथमपापश्चारुदत्तो व्यापाद्यते । अहं निगडेन स्वामिना बद्धः । भवतु । आक्रन्दामि । शृणुतार्याः, शृणुत । अस्तीदानीं मया पापेन प्रवहणपरिवर्तेन पुष्पकरण्डकजीर्णोद्यानं वसन्तसेना नीता । ततो मम स्वामिना मां न कामयस इति कृत्वा बाहुपाशबलात्कारेण मारिता, न पुनरेतेनार्येण । कथम् । विदूरतया न कोऽपि शृणोति । तत्किं करोमि । आत्मानं पातयामि । यद्येवं करोमि, तदार्यचारुदत्तो न व्यापाद्यते । भवतु । अस्याः प्रासादबालाग्रप्रतोलिकात एतेन जीर्णगवाक्षेणात्मानं निक्षिपामि । वरमहमुपरतः, न पुनरेष कुलपुत्रविहगानां वासपादप आर्यचारुदत्तः । एवं यदि विपद्ये लब्धो मया परलोकः । आश्चर्यम् । नोपरतोऽस्मि । भग्नो मे दण्डनिगडः । तच्चाण्डालघोषं समन्विष्यामि । हंहो चाण्डालाः, अन्तरमन्तरम् । )

**चाण्डालौ**—अले, के अन्तलं मग्गेदि । ( अरे, कोऽन्तरं याचते । )

( चेटः 'शुणाध' इति पूर्वोक्तं पठति । )

**चारुदत्तः**—अये,

कोऽयमेवंविधे काले कालपाशस्थिते मयि ।
अनावृष्टिहते सस्ये द्रोणमेघ इवोदितः ॥ २६ ॥

भोः, श्रुतं भवद्भिः ।

न भीतो मरणादस्मि केवलं दूषितं यशः ।
विशुद्धस्य हि मे मृत्युः पुत्रजन्मसमो भवेत् ॥ २७ ॥

अन्यच्च ।

तेनास्म्यकृतवैरेण क्षुद्रेणात्यल्पबुद्धिना ।
शरेणेव विषाक्तेन दूषितेनापि दूषितः ॥ २८ ॥

**चाण्डालौ**—थावलअ, अवि शच्चं भणाशि । ( स्थावरक, अपि सत्यं भणसि । )

**चेटः**—शच्चम् । हग्गे वि मा कश्श वि कधइश्शशि त्ति पाशादबालग्ग-पदोलिकाए दण्डणिअलेण बन्धिअ णिक्खित्ते । ( सत्यम् । अहमपि मा कस्यापि कथयिष्यसीति प्रासादबालाग्रप्रतोलिकायां दण्डनिगडेन बद्ध्वा निक्षिप्तः । )

( प्रविश्य । )

**शकारः**—( सहर्षम् । )

मंशेण तिक्खामिलकेण भत्ते शाकेण शूपेण शमच्छकेण ।
भुत्तं मए अत्तणअश्श गेहे शालिश्शकूलेण गुलोदणेण ॥२९॥

( कर्णं दत्त्वा । ) भिण्णकंशखङ्खणाए चाण्डालवाआए शलशंजोए । जधा अ एशे उक्खालिदे वज्झडिण्डिमशद्दे पडहाणं अ शुणीअदि, तधा तक्केमि, दलिद्दचालुदत्ताके वज्झट्ठाणं णीअदि त्ति । ता पेक्खिश्शम् । शत्तुविणाशे णाम मम महन्ते हलक्कश्श पलितोशे होदि । शुदं अ मए, जे वि किल शत्तुं वावादअन्तं पेक्खदि, तश्श अण्णाश्शिं जम्मन्तले अक्खिलोगे ण होदि । मए क्खु विशगण्ठिगब्भपविट्ठेण विअ कीडएण किं पि अन्तलं मग्गमाणेण उप्पाडिदे ताह दलिद्दचारुदत्ताह विणाशे । शंपदं अत्तणकेलिकाए पाशादबालग्गपदोलिकाए अहिलुहिअ अत्तणो पलक्कमं पेक्खामि । ( तथा कृत्वा दृष्ट्वा च । ) ही ही, एदाह दलिद्दचालुदत्ताह वज्झं णीअमाणाह एवड्ढे जणशंमद्दे, जं वेलं अम्हालिशे पबले वलमणुश्शे वज्झं णीअदि तं वेलं कीदिशे भवे । ( निरीक्ष्य । ) कधम् । एशे शे णवबलदके

विअ मण्डिदे दक्खिणं दिशं णीअदि । अध किंणिमित्तं ममकेलिकाए पाशा-दबालग्गपदोलिकाए शमीवे घोशणा णिवडिदा, णिवालिदा अ । ( विलोक्य । ) कधम्, थावलके चेडे वि णत्थि इध । मा णाम तेण इदो गदुअ मन्तभेदे कडे भविश्शदि । ता जाव णं अण्णेशामि ।

( मांसेन तिक्ताम्लेन भक्तं शाकेन सूपेन समत्स्यकेन ।
भुक्तं मयात्मनो गेहे शालीयकूरेण गुडौदनेन ॥

भिन्नकांस्यवत्खङ्खणायाश्चाण्डालवाचायाः स्वरसंयोगः । यथा चैष उद्गीतो वध्यडिण्डिम-शब्दः पटहानां च श्रूयते, तथा तर्कयामि दरिद्रचारुदत्तको वध्यस्थानं नीयत इति । तत्प्रेक्षिष्ये । शत्रुविनाशो नाम मम महान्हृदयस्य परितोषो भवति । श्रुतं च मया, योऽपि किल शत्रुं व्यापाद्यमानं पश्यति, तस्यान्यस्मिञ्जन्मान्तरेऽक्षिरोगो न भवति । मया खलु विषग्रन्थिगर्भप्रविष्टेनेव कीटकेन किमप्यन्तरं मृगयमाणेनोत्पादितस्तस्य दरिद्रचारुदत्तस्य विनाशः । सांप्रतमात्मीयां प्रासादबालाग्रप्रतोलिकायामधिरुह्यात्मनः पराक्रमं पश्यामि । ही ही, एतस्य दरिद्रचारुदत्तस्य वध्यं नीयमानस्यैतावाञ्जनसंमर्दः, यस्यां वेलायामस्मादृशः प्रवरो वरमानुषो वध्यं नीयते तस्यां वेलायां कीदृशो भवेत् । कथम् । एष स नवब-लीवर्द इव मण्डितो दक्षिणां दिशं नीयते । अथ किंनिमित्तं मदीयायाः प्रासादबालाग्रप्रतो-लिकायाः समीपे घोषणा निपतिता, निवारिता च । कथम्, स्थावरकश्चेटोऽपि नास्तीह । मा नाम तेनेतो गत्वा मन्त्रभेदः कृतो भविष्यति । तद्यावदेनमन्विष्यामि । ) [ इत्यवती-र्योपसर्पति । ]

**चेटः**—( दृष्ट्वा । ) भट्टालका, एशे शे आगडे । ( भट्टारकाः एष स आगतः । )

**चाण्डालौ**—

ओशलध देध मग्गं दालं ढक्केध होध तुण्हीआ ।
अविणअतिक्खविशाणे दुट्ठबइल्ले इदो एदि ॥ ३० ॥
( अपसरत दत्त मार्गं द्वारं पिधत्त भवत तूष्णीकाः ।
अविनयतीक्ष्णविषाणो दुष्टबलीवर्द इत एति ॥ )

**शकारः**—अले, अले अन्तलं अन्तलं देध । ( उपसृत्य । ) पुत्तका थावलका चेडा, एहि । गच्छम्ह । ( अरे अरे, अन्तरमन्तरं दत्त । पुत्रक स्थावरक चेटक, एहि । गच्छावः । )

**चेटः**—ही ही अणज्ज, वशन्तशेणिअं मालिअ ण पलितुट्टे शि । शंपदं पणइजणकप्पपादवं अज्जचालुदत्तं मालइदुं ववशिदे शि । ( ही ही अनार्य, वसन्तसेनां मारयित्वा न परितुष्टोऽसि सांप्रतं प्रणयिजनकल्पपादपमार्यचारुदत्तं मारयितुं व्यवसितोऽसि । )

**शकारः**—ण हि लअणकुम्भशलिशे हग्गे इत्थिअं वावादेमि । ( न हि खलकुम्भसदृशोऽहं स्त्रियं व्यापादयामि । )

**सर्वे**—अहो, तुए मारिदा । ण अज्जचारुदत्तेण । ( अहो त्वया मारिता । नार्यचारुदत्तेन । )

**शकारः**—के एव्वं भणादि । ( क एवं भणति । )

**सर्वे**—( चेटमुद्दिश्य । ) णं एसो साहू । ( नन्वेष साधुः । )

**शकारः**—[ अपवार्य सभयम् ] अविद मादिके अविद मादिके, कधं थावलके चेडे शुट्ठु ण मए शंजदे । एशे क्खु मम अकज्जश्श शक्खी । ( विचिन्त्य । ) एव्वं दाव कलइश्शम् । ( प्रकाशम् । ) अलिअं भश्टालका । हंहो, एशे चेडे शुवण्णचोलिआए मए गहिदे पिश्टिदे मालिदे बद्धे अ । ता किदवेले एशे जं भणादि किं शच्चम् । ( अपवारितकेन चेटस्य कटकं प्रयच्छति । स्वैरकम् । ) पुश्तका थावलका चेडा, एदं गेण्हिअ अण्णधा भणाहि । ( हन्त, कथं स्थावरकश्चेटः सुष्ठु न मया संयतः । एष खलु ममाकार्यस्य साक्षी । एवं तावत्करिष्यामि । अलीकं भट्टारकाः । अहो, एष चेटः सुवर्णचोरिकया मया गृहीतस्ताडितो मारितो बद्धश्च । तत्कृतवैर एव यद्भणति किं सत्यम् । पुत्रक स्थावरक चेट, एतद्गृहीत्वान्यथा भण । )

**चेटः**—( गृहीत्वा । ) पेक्खध पेक्खध भट्टालका । हंहो, शुवण्णेण मं पलोभेदि । ( पश्यत पश्यत भट्टारकाः । अहो, सुवर्णेन मां प्रलोभयति । )

**शकारः**—( कटकमाच्छिद्य । ) एशे शे शुवण्णके, जश्श कालणादो मए बद्धे । ( सक्रोधम् । ) हंहो चाण्डाला, मए क्खु एशे शुवण्णभण्डाले णिउत्ते शुवण्णं चोलअन्ते मालिदे पिश्टदे । ता जदि ण पत्तिआअध ता पिश्टिं दाव पेक्खध । ( एतत्तत्सुवर्णकम्, यस्य कारणान्मया बद्धः । हंहो चाण्डालाः, मया खल्वेष सुवर्णभाण्डारे नियुक्तः सुवर्णं चोरयन्मारितस्ताडितः । तद्यदि न प्रत्ययध्वं तदा पृष्ठं तावत्पश्यत । )

**चाण्डालौ**—( दृष्ट्वा । ) शोहणं भणादि । वितत्ते चेडे किं ण प्पलवदि । [ शोभनं भणति । वितप्तश्चेटः किं न प्रलपति । ]

**चेटः**—हीमादिके, ईदिशे दाशभावे, जं शच्चं कंपि ण पत्तिआअदि । ( सकरुणम् । ) अज्जचालुदत्त, एत्तिके मे विहवे । ( हन्त, ईदृशो दासभावः, यत्सत्यं कमपि न प्रत्यापयति । आर्यचारुदत्त, एतावान्मे विभवः । ) ( इति पादयोः पतति । )

**चारुदत्तः**—[ सकरुणम् । ]

उत्तिष्ठ भोः पतितसाधुजनानुकम्पि-
न्निष्कारणोपगतबान्धव धर्मशील ।
यत्नः कृतोऽपि सुमहान्मम मोक्षणाय
दैवं न संवदति किं न कृतं त्वयाद्य ॥ ३१ ॥

**चाण्डालौ**—भट्टके, पिट्टिअ एदं चेडं णिक्खालेहि । ( भट्टक, ताडयित्वै- चेटं निष्कासय । )

**शकारः**—णिक्कम ले । ( इति निष्कामयति । ) अले चाण्डाला, किं विलम्बेध । मालेध एदम् । ( निष्काम रे । अरे अरे चाण्डालाः, किं विलम्बध्वम् मारयतैनम् । )

**चाण्डालौ**—जदि तुवलशि ता शअं ज्जेव मालेहि । ( यदि त्वरयसे तर्हि स्वयमेव मारय । )

**रोहसेनः**—अले चाण्डाला, मं मारेध । मुञ्चध आवुकम् । ( अरे चाण्डालाः मां मारयत । मुञ्चत पितरम् । )

**शकारः**—शपुत्तं ज्जेव एदं मालेध । ( सपुत्रमेवैतं मारयत । )

**चारुदत्तः**—सर्वमस्य मूर्खस्य संभाव्यते । तद्गच्छ पुत्र, मातुः समीपम् ।

**रोहसेनः**—किं मए गदेण कादव्वम् । ( किं मया गतेन कर्तव्यम् । )

**चारुदत्तः**—

आश्रमं वत्स गन्तव्यं गृहीत्वाद्यैव मातरम् ।
मा पुत्र पितृदोषेण त्वमप्येवं गमिष्यसि ॥ ३२ ॥

तद्वयस्य, गृहीत्वैनं व्रज ।

**विदूषकः**—भो वअस्स, एव्वं तुए जाणिदम्, तुए विणा अहं पाणाइं धारेमि त्ति ( भो वयस्य, एवं त्वया ज्ञातम्, त्वया विनाहं प्राणान्धारयामीति । )

**चारुदत्तः**—वयस्य, स्वाधीनजीवितस्य न युज्यते तव प्राणपरित्यागः।

**विदूषकः**—( स्वगतम् । ) जुत्तं णेदम् । तधा वि ण सक्कुणोमि पिअ- वअस्सविरहिदो पाणाइं धारेदुं त्ति । ता बम्हणीए दारअं समप्पिअ पाण- परिच्चाएण अत्तणो पिअवअस्सं अणुगमिस्सम् । ( प्रकाशम् । ) भो वअस्स, पराणेमि एदं लहुम् । ( युक्तं न्विदम् । तथापि न शक्नोमि प्रियवयस्यविरहितः प्राणा- न्धर्तुमिति । तद्ब्राह्मण्यै दारकं समर्प्य प्राणपरित्यागेनात्मनः प्रियवयस्यमनुगमिष्यामि । भो वयस्य, परानयाम्येतं लघु । ) [ इति सकण्ठग्रहं पादयोः पतति । ]

( दारकोपि रुदन्पतति । )

**शकारः**—अले, णं भणामि शपुत्तकं चालुदत्तकं वावादेध त्ति । (अरे, ननु भणामि सपुत्रकं चारुदत्तं व्यापादयतेति ।)

(चारुदत्तो भयं नाटयति ।)

**चाण्डालौ**—णहि अम्हाणं ईदिशी लाआण्णत्ती, जधा शपुत्तं चालुदत्तं वावादेध त्ति । ता णिक्कम ले दालआ, णिक्कम । (इति निष्क्रामयतः ।) इमं तइअं घोशणट्ठाणम् । ताडेध डिण्डिमम् । (न ह्यस्माकमीदृशी राजाज्ञप्तिः, यथा सपुत्रं चारुदत्तं व्यापादयतेति । तन्निष्क्राम रे दारक, निष्क्राम । इदं तृतीयं घोषणास्थानम् । ताडयत डिण्डिमम् ।) [ पुनर्घोषयतः । ]

**शकारः**—( स्वगतम् ।) कधं एशे ण पत्तिआअन्ति पौला। (प्रकाशम् ।) हंहो चालुदत्ता बडुका, ण पत्तिआअदि एशे पौलजणे । ता अत्तणकेलिकाए जीहाए भणाहि मए वशन्तशेणा मालिदेत्ति। ( कथमेते न प्रत्ययन्ते पौराः । अरे चारुदत्तबटुक, न प्रत्ययत एष पौरजनः । तदात्मीयया जिह्वया भण मया वसन्तसेना मारितेति ।)

( चारुदत्तस्तूष्णीमास्ते । )

**शकारः**—अले चण्डालगोहे, ण भणादि चालुदत्तबडुके। ता भणावेध इमिणा जज्जलवंशखण्डेण शङ्खलेण तालिअ तालिअ। ( अरे चाण्डालमनुष्य, न भणति चारुदत्तबटुकः । तद्भणयतानेन जर्जरवंशखण्डेण शङ्खलेन ताडयित्वा ताडयित्वा ।)

**चाण्डालः**—( प्रहारमुद्यम्य ।) भो चालुदत्त, भणाहि । ( भोश्चारुदत्त, भण । )

**चारुदत्तः**—( सकरुणम् । )

प्राप्यैतद्व्यसनमहार्णवप्रपातं
न त्रासो न च मनसोऽस्ति मे विषादः ।
न को मां दहति जनापवादवह्नि-
र्वक्तव्यं यदिह मया हता प्रियेति ॥ ३३ ॥

( शकारः पुनस्तथैव । )

**चारुदत्तः**—भो भोः पौराः ( 'मया खलु नृशंसेन' ( १।३०,३८ ) इत्यादि पुनः पठति । )

**शकारः**—वावादिदा । (व्यापादिता ।)

**चारुदत्तः**—एवमस्तु ।

**प्रथमचाण्डालः**—अले, तव अत्त वज्झपालिआ। (अरे तवात्र वध्यपालिका।)

**द्वितीयचाण्डालः**—अले, तव। ( अरे, तव। )

**प्रथमः**—अले, लेक्खअं कलेम्ह। ( इति बहुविधं लेखकं कृत्वा। ) अले, जदि ममकेलिका वज्झपालिआ, ता चिट्ठदु दाव मुहुत्तअम्। ( अरे लेखं कुर्मः। अरे, यदि मदीया वध्यपालिका, तदा तिष्ठतु तावन्मुहूर्तकम्। )

**द्वितीयः**—किंणिमित्तम्। ( किंनिमित्तम्। )

**प्रथमः**—अले, भणिदो म्हि पिदुणा शग्गं गच्छन्तेण, जधा—पुत्त वीरअ, जइ तुह वज्झपालिआ होदि, मा शहशा वावादअशि वज्झम्। ( अरे, भणितोऽस्मि पित्रा स्वर्गं गच्छता, यथा—पुत्र वीरक, यदि तव वध्यपालिका भवति, मा सहसा व्यापादयसि वध्यम्। )

**द्वितीयः**—अले, किंणिमित्तम्। ( अरे, किंनिमित्तम्। )

**प्रथमः**—कदावि कोवि साहू अत्थं दइअ वज्झं मोआवेदि। कदावि लण्णो पुत्ते भोदि, तेण वद्धावेण शव्ववज्झाणं मोक्खे होदि। कदावि हत्थी बन्धं खण्डेदि, तेण शंभमेण वज्झे मुक्के होदि। कदावि लाअपलिवत्ते होदि, तेण शव्ववज्झाणं मोक्खे होदि। ( कदापि कोऽपि साधुरर्थं दत्त्वा वध्यं मोचयति। कदापि राज्ञः पुत्रो भवति, तेन वृद्धिमहोत्सवेन सर्ववध्यानां मोक्षो भवति। कदापि हस्ती बन्धं खण्डयति, तेन संभ्रमेण वध्यो मुक्तो भवति। कदापि राजपरिवर्तो भवति, तेन सर्ववध्यानां मोक्षो भवति। )

**शकारः**—किं किं लाअपलिवत्ते होदि। ( किं किं राजपरिवर्तो भवति। )

**चाण्डालः**—अले, वज्झपालिआए लेक्खअं कलेम्ह। ( अरे, वध्यपालिकाया लेखं कुर्मः। )

**शकारः**—अले, शिग्घं मालेध चालुदत्ताकम्। ( अरे, शीघ्रं मारयत चारुदत्तम्। ) [ इत्युक्त्वा चेटं गृहीत्वैकान्ते स्थितः। ]

**चाण्डालः**—अज्जचालुदत्त, लाअणिओओ क्खु अवलज्झदि, ण क्खु अम्हे चाण्डाला। ता शुमलेहि जं शुमलिव्वम्। ( आर्यचारुदत्त, राजनियोगः खल्वपराध्यति, न खलु वयं चाण्डालाः तत्स्मर यत्स्मर्तव्यम्। )

**चारुदत्तः**—

प्रभवति यदि धर्मो दूषितस्यापि मेऽद्य
प्रबलपुरुषवाक्यैर्भाग्यदोषात्कथंचित्।
सुरपतिभवनस्था यत्र तत्र स्थिता वा
व्यपनयतु कलङ्कं स्वस्वभावेन सैव ॥ ३४ ॥

भोः, क्व तावन्मया गन्तव्यम्।

**चाण्डालः**—( अग्रतो दर्शयित्वा । ) अले, एदं दीशदि दक्खिणमशाणम्, जं पेक्खिअ वज्झा झत्ति पाणाइं मुञ्चन्ति । पेक्ख पेक्ख ।

अद्धं कलेवलं पडिवुत्तं कड्ढन्ति दीहगोमाआ ।

अद्धं पि शूललग्गं वेशं विअ अट्टहाशश्श ॥ ३५ ॥ ( अरे एतद्दृश्यते दक्षिणश्मशानम्, यत्प्रेक्ष्य वध्या झटिति प्राणान्मुञ्चन्ति । पश्य पश्य ।

( अर्धं कलेवरं प्रतिवृत्तं कर्षन्ति दीर्घगोमायवः ।

अर्धमपि शूललग्नं वेश इवाट्टहासस्य ॥ )

**चारुदत्तः**—हा, हतोऽस्मि मन्दभाग्यः । ( इति सावेगमुपविशति । )

**शकारः**—ण दाव गमिश्शम् । चालुदत्ताकं वावादअन्तं दाव पेक्खामि । ( परिक्रम्य दृष्ट्वा । ) कधं उववि‍श्टे । ( न तावद्गमिष्यामि । चारुदत्तकं व्यापाद्यमानं तावत्पश्यामि । कथमुपविष्टः । )

**चाण्डालः**—चारुदत्ता, किं भीदेशि । ( चारुदत्त, किं भीतोऽसि । )

**चारुदत्तः**—( सहसोत्थाय । ) मूर्ख । ( 'न भीतो मरणादस्मि केवलं दूषितं यशः' ( १०।२७ ) इत्यादि पुनः पठति । )

**चाण्डालः**—अज्जचालुदत्त, गअणदले पडिवशन्ता चन्दशुज्जा वि विपत्तिं लहन्ति । किं उण जणा मलणभीलुआ माणवा वा । लोए कोवि उट्ठिदो पडदि, कोवि पडिदोवि उट्ठेदि । उड्डन्तपडन्ताह वशणपाडिआ शवश्श उण अत्थि । एदाइं हिअए कदुअ संधालेहि अत्ताणअम् । ( द्वितीयचाण्डालं प्रति । ) एदं चउट्ठं घोषणट्ठाणम् । ता उग्घोशम्ह । ( आर्यचारुदत्त, गगनतले प्रतिवसन्तौ चन्द्रसूर्यावपि विपत्तिं लभेते । किं पुनर्जना मरणभीरुका मानवा वा । लोके कोऽप्युत्थितः पतति, कोऽपि पतितोऽप्युत्तिष्ठते । उत्तिष्ठत्पततो वसनपातिका शवस्य पुनरस्ति । एतानि हृदये कृत्वा संधारयात्मानम् । एतच्चतुर्थं घोषणास्थानम् । तदुद्घोषयावः । )

( पुनस्तथैवोद्घोषयतः । )

**चारुदत्तः**—हा प्रिये वसन्तसेने । ( 'शशिविमलमयूख' ( १०।१३ ) इत्यादि पुनः पठति । )

( ततः प्रविशति ससंभ्रमा वसन्तसेना भिक्षुश्च । )

**भिक्षुः**—हीमाणहे, अद्धाणपलिश्शन्तं शमश्शाशिअ वशन्तशेणिअं णअन्ते अणुग्गहिदम्हि पव्वज्जाए । उवाशिके, कहिं तुमं णइश्शम् । ( आश्चर्यम् अस्थानपरिश्रान्तां समाश्वास्य वसन्तसेनिकां नयन्ननुगृहीतोऽस्मि प्रव्रज्यया । उपासिके, कुत्र त्वां नेष्यामि । )

**वसन्तसेना**—अज्जचारुदत्तस्स ज्जेव गेहम् । तस्स दंसणेण मिअलाञ्छणस्स विअ कुमुदिणिं आणन्देहि मम् । ( आर्यचारुदत्तस्यैव गेहम् । तस्य दर्शनेन मृगलाञ्छनस्येव कुमुदिनीमानन्दय माम् । )

**भिक्षुः**—( स्वगतम् । ) कदलेण मग्गेण पविशामि । ( विचिन्त्य । ) लाअमग्गेण ज्जेव पविशामि । उवाशिके, एहि । इमं लाअमग्गम् । ( आकर्ण्य । ) किं णु क्खु एशे लाअमग्गे महन्ते कलअले शुणीअदि । ( कतरेण मार्गेण प्रविशामि । राजमार्गेणैव प्रविशामि । उपासिके, एहि । अयं राजमार्गः । किं नु खलु राजमार्गे महान्कलकलः श्रूयते । )

**वसन्तसेना**—( अग्रतो निरूप्य । ) कधं पुरदो महाजणसमूहो । अज्ज, जाणाहि दाव किं णेदं त्ति विसमभरक्कन्ता विअ वसुंधरा एअवासोण्णदा उज्जइणी वट्टदि । ( कथं पुरतो महाजनसमूहः । आर्य, जानीहि तावत्किं न्विदमिति विषमभरक्रान्तेव वसुंधरा एकवासोन्नतोज्जयिनी वर्तते । )

**चाण्डालः**—इमं अ पच्छिमं घोषणट्ठाणम् । ता तालेध डिण्डिमम् । उग्घोशेध घोषणम् । ( तथा कृत्वा । ) भो चालुदत्त, पडिवालेहि । मा भाआहि । लहुं ज्जेव मालीअशि । ( इदं च पश्चिमं घोषणास्थानम् । तत्ताडयत डिण्डिमम् । उद्घोषयत घोषणाम् । भोश्चारुदत्त, प्रतिपालय । मा भैः । शीघ्रमेव मार्यसे । )

**चारुदत्तः**—भगवत्यो देवताः ।

**भिक्षुः**—( श्रुत्वा ससंभ्रमम् । ) उवाशिके, तुमं किल चालुदत्तेण मालिदाशि त्ति चालुदत्तो मालिदुं णीअदि । ( उपासिके, त्वं किल चारुदत्तेन मारितासीति चारुदत्तो मारयितुं नीयते । )

**वसन्तसेना**—( ससंभ्रमम् । ) हद्धी हद्धी, कधं मम मन्दभाइणीए किदे अज्जचालुदत्तो वावादीअदि । भो, तुरिदं तुरिदं आदेसेहि मग्गम् । ( हा धिक् हा धिक्, कथं मम मन्दभागिन्याः कृत आर्यचारुदत्तो व्यापाद्यते । भोः, त्वरितं त्वरितमादिश मार्गम् । )

**भिक्षुः**—तुवलदु तुवलदु बुद्धोवाशिका अज्जचालुदत्तं जीअन्तं शमश्शाशिदुम् । अज्जा, अन्तलं अन्तलं देध । ( त्वरतां त्वरतां बुद्धोपासिकार्यचारुदत्तं जीवन्तं समाश्वासयितुम् । आर्याः, अन्तरमन्तरं दत्त । )

**वसन्तसेना**—अन्तरं अन्तरम् । ( अन्तरमन्तरम् । )

**चाण्डालः**—अज्जचालुदत्त, शामिणिओओ अवलज्झदि । ता शुमलेहि जं शुमलिदव्वम् । (आर्यचारुदत्त, स्वामिनियोगोऽपराध्यति । तत्स्मर यत्स्मर्तव्यम् । )

**चारुदत्तः**—किंबहुना । ( 'प्रभवति—' ( १०।३४ ) इत्यादि श्लोकं पठति । )

**चाण्डालः**—( खड्गमाकृष्य । ) अज्जचालुदत्त, उत्ताणे, भविअ समं चिट्ठ । एक्कप्पहालेण मालिअ तुमं शग्गं णेम्ह । ( आर्यचारुदत्त, उत्तानो भूत्वा समं तिष्ठ । एकप्रहारेण मारयित्वा त्वां स्वर्गं नयामः । )

( चारुदत्तस्तथा तिष्ठति । )

**चाण्डालः**—( प्रहर्तुमीहते । खड्गपतनं हस्तादभिनयन् । ) ही कधम् ।

आअड्ढिदे शलोशं मुट्ठीए मुट्ठिणा गहीदे वि ।
धलणीएँ कीश पडिदे दालुणके अशणिशंणिहे खग्गे ॥ ३६ ॥

जधा एदं संवुत्तम्, तधा तक्केमि ण विवज्जदि अज्जचालुदत्ते त्ति । भअवदि शज्झवाशिणी, पशीद पशीद । अवि णाम चालुदत्तश्श मोक्खे भवे, तदो अणुगहिदं तुए चाण्डालउलं भवे ।

( ही कथम्

आकृष्टः सरोषं मुष्टौ मुष्टिना गृहीतोऽपि ।
धरण्यां किमर्थं पतितो दारुणकोऽशनिसंनिभः खड्गः ॥

यथैतत्संवृत्तम्, तथा तर्कयामि न विपद्यत आर्यचारुदत्त इति । भगवति सह्यवासिनी, प्रसीद प्रसीद । अपि नाम चारुदत्तस्य मोक्षो भवेत्, तदानुगृहीतं त्वया चाण्डालकुलं भवेत् । )

**अपरः**—जधाणत्तं अणुचिट्ठम्ह । ( यथाज्ञप्तमनुतिष्ठावः । )

**प्रथमः**—भोदु । एव्वं कलेम्ह । ( भवतु । एवं कुर्वः । )

( इत्युभौ चारुदत्तं शूले समारोपयितुमिच्छतः । )

[ चारुदत्तः 'प्रभवति' ( १०।३४ ) इत्यादि पुनः पठति । ]

**भिक्षुर्वसन्तसेना च**—( दृष्ट्वा । ) अज्जा, मा दाव मा दाव । अज्जा, एसा अहं मन्दभाइणी, जाए कारणादो एसो वावादीअदि । ( आर्याः, मा तावन्मा तावत् । आर्याः, एषाहं मन्दभागिनी यस्याः कारणादेष व्यापाद्यते । )

**चाण्डालः**—( दृष्ट्वा । )

का उण तुलिदं एशा अंशपडन्तेण चिउलभालेण ।
मा मेत्ति वाहलन्ती उद्विदहत्था इदो एदि ॥ ३७ ॥

( का पुनस्त्वरितमेषांसपतता चिकुरभारेण ।
मा मेति व्याहरन्त्युत्थितहस्तेत एति ॥ )

**वसन्तसेना**—अज्जचारुदत्त, किं णेदम् ( आर्यचारुदत्त, किं न्विदम् । )
[ इत्युरसि पतति । ]

**भिक्षुः**—अज्जचालुदत्त, किं णेदम् । ( आर्यचारुदत्त, किं न्विदम् ) [ इति पादयोः पतति । ]

**चाण्डालः**—( सभयमपसृत्य । ) कधम् वशन्तशेणा । णं क्खु अम्हेहिं शाहू ण वावादिदे । कथम्, वसन्तसेना । ननु खल्वस्माभिः साधुर्न व्यापादितः ।

**भिक्षुः**—( उत्थाय । ) अले, जीवदि चालुदत्ते । ( अरे, जीवति चारुदत्तः । )

**चाण्डालः**—जीवदि वश्शशदम् । ( जीवति वर्षशतम् । )

**वसन्तसेना**—( सहर्षम् । ) पच्चुज्जीविदम्हि । ( प्रत्युज्जीवितास्मि । )

**चाण्डालः**—ता जाव एदं वुत्तं राइण्णो जण्णवाडगदश्श णिवेदेम्ह ( तद्यावदेतद्वृत्तं राज्ञो यज्ञवाटगतस्य निवेदयावः । )

( इति निष्क्रामतः । )

**शकारः**—( वसन्तसेनां दृष्ट्वा सत्रासम् । ) ह्रीमादिके । केण गब्भदासी जीवाविदा । उक्कन्ताइं मे पाणाइं । भोदु । पलाइश्शम् । ( आश्चर्यम् । केन गर्भदासी जीवनं प्रापिता । उत्क्रान्ता मे प्राणाः । भवतु । पलायिष्ये ) [ इति पलायते । ]

**चाण्डालः**—( उपसृत्य । ) अले, णं अम्हाणं ईदिशी लाआण्णत्ती—जेण शा वावादिदा, तं मालेध त्ति । ता लट्ठिअशालअं ज्जेव अण्णेशम्ह । ( अरे, नन्वस्माकमीदृशी राजाज्ञप्तिः—येन सा व्यापादिता, तं मारयतेति । तद्राष्ट्रियश्यालमेवान्विष्यावः । )

( इति निष्क्रान्तौ । )

**चारुदत्तः**—( सविस्मयम् । )

केयमभ्युद्यते शस्त्रे मृत्युवक्त्रगते मयि ।
अनावृष्टिहते सस्ये द्रोणवृष्टिरिवागता ॥ ३८ ॥

अवलोक्य च । )

वसन्तसेना किमियं द्वितीया समागता सैव दिवः किमित्थम् ।
भ्रान्तं मनः पश्यति वा ममैनां वसन्तसेना न मृताथ सैव ॥ ३९ ॥

अथवा ।

किं नु स्वर्गात्पुनः प्राप्ता मम जीवातुकाम्यया ।
तस्या रूपानुरूपेण किमुतान्येयमागता ॥ ४० ॥

**वसन्तसेना**—( सास्रमुत्थाय पादयोर्निपत्य । ) अज्जचालुदत्त, सा ज्जेव अहं पावा, जाए कारणादो इअं तुए असरिसी अवत्था पाविदा । ( आर्यचारुदत्त, सैवाहं पापा, यस्याः कारणादियं त्वयासदृश्यवस्था प्राप्ता । )

( नेपथ्ये । )

अच्चरिअं अच्चरिअम् । जीवदि वसन्तसेना । ( आश्चर्यमाश्चर्यम् ! जीवति वसन्तसेना । ) [ इति सर्वे पठन्ति । ]

**चारुदत्तः**—( आकर्ण्य सहसोत्थाय स्पर्शसुखमभिनीय निमीलिताक्ष एव हर्ष-गद्गदाक्षरम् । ) प्रिये, वसन्तसेना त्वम् ।

**वसन्तसेना**—सा ज्जेवाहं मन्दभाआ । ( सैवाहं मन्दभाग्या )

**चारुदत्तः**—( निरूप्य सहर्षम् । ) कथं वसन्तसेनैव । ( सानन्दम् । )

कुतो बाष्पाम्बुधाराभिः स्नपयन्ती पयोधरौ ।
मयि मृत्युवशं प्राप्ते विद्येव समुपागता ॥ ४१ ॥

प्रिये वसन्तसेने,

त्वदर्थमेतद्विनिपात्यमानं देहं त्वयैव प्रतिमोचितं मे ।
अहो प्रभावः प्रियसंगमस्य मृतोऽपि को नाम पुनर्ध्रियेत ॥ ४२ ॥

अपि च । प्रिये, पश्य ।

रक्तं तदेव वरवस्त्रमियं च माला
कान्तागमेन हि वरस्य यथा विभाति ।
एते च वध्यपटहध्वनयस्तथैव
जाता विवाहपटहध्वनिभिः समानाः ॥ ४३ ॥

**वसन्तसेना**—अदिदक्खिणदाए किं णेदं ववसिदं अज्जेण । ( अतिद-क्षिणतया किं न्विदं व्यवसितमार्येण । )

**चारुदत्तः**—प्रिये, त्वं किल मया हतेति

पूर्वानुबद्धवैरेण शत्रुणा प्रभविष्णुना ।
नरके पतता तेन मनागस्मि निपातितः ॥ ४४ ॥

**वसन्तसेना**—( कर्णौ पिधाय । ) सन्तं पावम् । तेण म्हि राअसालेण वावादिदा । ( शान्तं पापम् । तेनास्मि राजश्यालेन व्यापादिता । )

**चारुदत्तः**—( भिक्षुं दृष्ट्वा । ) अयमपि कः ।

**वसन्तसेना**—तेण अणज्जेण वावादिदा । एदिणा अज्जेण जीवाविदम्हि । ( तेनानार्येण व्यापादिता । एतेनार्येण जीवं प्रापितास्मि । )

**चारुदत्तः**—कस्त्वमकारणबन्धुः ।

**भिक्षुः**—ण पच्चभिजाणादि मं अज्जो । अहं शे अज्जश्श चलणशंवाहचिन्तए शंवाहके णाम । जूदिअलेहिं गहिदे एदाए उवाशिकाए अज्जश्श केलके त्ति अलंकालपणणिक्कीदे म्हि । तेण अ जूदणिव्वेदेण शक्कशमणके शंवुत्ते म्हि । एशावि अज्जा पवहणविपज्जाशेण पुप्फकलण्डकजिणुज्जाणं गदा। तेण अ अणज्जेण ण मं बहु मण्णेशि त्ति बाहुपाशबलक्कालेण मालिदा । मए दिट्ठा । ( न प्रत्यभिजानाति मामार्यः । अहं स आर्यस्य चरणसंवाहचिन्तकः संवाहको नाम । द्यूतकरैर्गृहीत एतयोपासिकयार्यस्यात्मीय इत्यलंकारपणनिष्क्रीतोऽस्मि । तेन च द्यूतनिर्वेदेन शाक्यश्रमणकः संवृत्तोऽस्मि । एषाप्यार्या प्रवहणविपर्यासेन पुष्पकरण्डकजीर्णोद्यानं गता । तेन चानार्येण न मां बहु मन्यस इति बाहुपाशबलात्कारेण मारिता। मया दृष्टा । )

( नेपथ्ये कलकलः । )

जयति वृषभकेतुर्दक्षयज्ञस्य हन्ता
तदनु जयति भेत्ता षण्मुखः क्रौञ्चशत्रुः ।
तदनु जयति कृत्स्नां शुभ्रकैलासकेतुं
विनिहतवरवैरी चार्यको गां विशालाम् ॥ ४५ ॥

( प्रविश्य सहसा )

**शर्विलकः**—

हत्वा तं कुनृपमहं हि पालकं भो-
स्तद्राज्ये द्रुतमभिषिच्य चार्यकं तम् ।
तस्याज्ञां शिरसि निधाय शेषभूतां
मोक्ष्येऽहं व्यसनगतं च चारुदत्तम् ॥ ४६ ॥

हत्वा रिपुं तं बलमन्त्रिहीनं पौरान्समाश्वास्य पुनः प्रकर्षात् ।
प्राप्तं समग्रं वसुधाधिराज्यं राज्यं बलारेरिव शत्रुराज्यम् ॥४७॥

( अग्रतो निरूप्य । ) भवतु । अत्र तेन भवितव्यम्, यत्रायं जनपदसमवायः। अपि नामायमारम्भः क्षितिपतेरार्यकस्यार्यचारुदत्तस्य जीवितेन सफलः स्यात्। ( त्वरिततरमुपसृत्य । ) अपयात जाल्माः । ( दृष्ट्वा । सहर्षम् । ) अपि ध्रियते चारुदत्तः सह वसन्तसेनया । संपूर्णाः खल्वस्मत्स्वामिनो मनोरथाः ।

दिष्ट्या भो व्यसनमहार्णवादपारा-
दुत्तीर्णं गुणधृतया सुशीलवत्या ।

नावेव प्रियतमया चिरान्निरीक्ष्ये
ज्योत्स्नाढ्यं शशिनमिवोपरागमुक्तम् ॥ ४८ ॥

तत्कृतमहापातकः कथमिवैनमुपसर्पामि । ( अथवा । ) सर्वत्रार्जवं शोभते । ( प्रकाशमुपसृत्य बद्धाञ्जलिः । ) आर्यचारुदत्त ।

**चारुदत्तः**—ननु को भवान् ।

**शर्विलकः**—

येन ते भवनं भित्त्वा न्यासापहरणं कृतम् ।
सोऽहं कृतमहापापस्त्वामेव शरणं गतः ॥ ४९ ॥

**चारुदत्तः**—सखे, मैवम् । त्वयासौ प्रणयः कृतः । (इति कण्ठे गृह्णाति ।)

**शर्विलकः**—अन्यच्च ।

आर्यकेणार्यवृत्तेन कुलं मानं च रक्षता ।
पशुवद्यज्ञवाटस्थो दुरात्मा पालको हतः ॥ ५० ॥

**चारुदत्तः**—किम् ।

**शर्विलकः**—

त्वद्यानं यः समारुह्य यातस्त्वा शरणं पुरा ।
पशुवद्वितते यज्ञे हतस्तेनाद्य पालकः ॥ ५१ ॥

**चारुदत्तः**—शर्विलक, योऽसौ पालकेन घोषादानीय निष्कारणं कूटागारे बद्ध आर्यकनामा त्वया मोचितः ।

**शर्विलकः**—यथाह तत्रभवान् ।

**चारुदत्तः**—प्रियं नः प्रियम् ।

**शर्विलकः**—प्रतिष्ठितमात्रेण तव सुहृदार्यकेणोज्जयिन्यां वेणातटे कुशावत्यां राज्यमतिसृष्टम् । तत्प्रतिमान्यतां प्रथमः सुहृत्प्रणयः । ( परिवृत्य । ) अरे रे, आनीयतामयं पापो राष्ट्रियशठः ।

( नेपथ्ये । )

यथाज्ञापयति शर्विलकः ।

**शर्विलकः**—आर्य, नन्वयमार्यको राजा विज्ञापयति—इदं मया युष्मद्गुणोपार्जितं राज्यम् । तदुपयुज्यताम् ।

**चारुदत्तः**—अस्मद्गुणोपार्जितं राज्यम् ।

( नेपथ्ये । )

अरे रे राष्ट्रियश्यालक, एह्येहि । स्वस्याविनयस्य फलमनुभव ।

( ततः प्रविशति पुरुषैरधिष्ठितः पश्चाद्बाहुबद्धः शकारः । )

**शकारः**—हीमादिके,

एव्वं दूलमदिक्कन्ते उद्दामे विअ गद्दहे ।

आणीदे क्खु हगे बद्धे हुडे अण्णे व्व दुक्कले ॥ ५२ ॥

( दिशोऽवलोक्य । ) शमन्तदो उवट्ठिदे एशे लश्टिअबन्धे । ता कं दाणिं अशलणे शलणं वजामि । ( विचिन्त्य । ) भोदु । तं ज्जेव अब्भुववण्ण-शलणवच्छलं गच्छामि । ( इत्युपसृत्य । ) अज्जचालुदत्त, पलित्ताआहि, पलित्ताआहि । ( आश्चर्यम् । )

[ एवं दूरमतिक्रान्त उद्दाम इव गर्दभः ।

आनीतः खल्वहं बद्धः कुक्कुरोऽन्य इव दुष्करः ॥

समन्तत उपस्थित एष राष्ट्रियबन्धुः । तत्कमिदानीमशरणः शरणं व्रजामि । भवतु । तमेवाभ्युपपन्नशरणवत्सलं गच्छामि । आर्यचारुदत्त, परित्रायस्व परित्रायस्व । ]

( इति पादयोः पतति । )

( नेपथ्ये ! )

अज्जचालुदत्त, मुञ्च मुञ्च । वावादेम्ह एदम् ।

(आर्यचारुदत्त, मुञ्च मुञ्च । व्यापादयामैतम् ।)

**शकारः**—( चारुदत्तं प्रति । ) भो अशलणशलणे, पलित्ताआहि । ( भो अशरणशरण, परित्रायस्व । )

**चारुदत्तः**—( सानुकम्पम् । ) अहह, अभयमभयं शरणागतस्य ।

**शर्विलकः**—( सावेगम् । ) आः, अपनीयतामयं चारुदत्तपार्श्वात् । ( चारुदत्तं प्रति । ) ननूच्यतां किमस्य पापस्यानुष्ठीयतामिति ।

आकर्षन्तु सुबद्ध्वैनं श्वभिः संखाद्यतामथ ।

शूले वा तिष्ठतामेष पाट्यतां क्रकचेन वा ॥ ५३ ॥

**चारुदत्तः**—किमहं यद्ब्रवीमि तत्क्रियते ।

**शर्विलकः**—कोऽत्र संदेहः

**शकारः**—भश्टालआ चालुदत्त, शालणागदे म्हि । ता पलित्ताआहि पलित्ताआहि । जं तुए शलिशं तं कलेहि । पुणो ण ईदिशं कलिश्शम् । ( भट्टारक चारुदत्त, शरणागतोऽस्मि । तत्परित्रायस्व परित्रायस्व । यत्तव सदृशं तत्कुरु । पुनर्नेदृशं करिष्यामि । )

[ नेपथ्ये । ]

पौराः वावादेध । किंणिमित्तं पादकी जीवावीअदि ।

( पौराः, व्यापादयत । किंनिमित्तं पातकी जीव्यते । )

[ वसन्तसेना वध्यमालां चारुदत्तस्य कण्ठादपनीय शकारस्योपरि क्षिपति । ]

**शकारः**—भव्भदाशीधीए, पशीद, पशीद । ण उण मालइश्शम् । ता पलित्ताआहि । ( गर्भदासीपुत्रि प्रसीद प्रसीद । न पुनर्मारयिष्यामि । तत्परित्रायस्व )

**शर्विलकः**—अरे रे, अपनयत । आर्यचारुदत्त, आज्ञाप्यताम्—किमस्य पापस्यानुष्ठीयताम् ।

**चारुदत्तः**—किमहं यद्ब्रवीमि तत्क्रियते ।

**शर्विलकः**—कोऽत्र संदेहः ।

**चारुदत्तः**—सत्यम् ।

**शर्विलकः**—सत्यम् ।

**चारुदत्तः**—यद्येवं शीघ्रमयम्—

**शर्विलकः**—किं हन्यताम् ।

**चारुदत्तः**—नहि नहि । मुच्यताम् ।

**शर्विलकः**—किमर्थम् ।

**चारुदत्तः**—

शत्रुः कृतापराधः शरणमुपेत्य पादयोः पतितः ।
शस्त्रेण न हन्तव्यः

**शर्विलकः**—एवम् । तर्हि श्वभिः खाद्यताम् ।

**चारुदत्तः**—नहि ।

उपकारहतस्तु कर्तव्यः ॥ ५४ ॥

**शर्विलकः**—अहो, आश्चर्यम् । किं करोमि । वदत्वार्यः ।

**चारुदत्तः**—तन्मुच्यताम् ।

**शर्विलकः**—मुक्तो भवतु ।

**शकारः**—हीमादिके । पच्चुज्जीविदे म्हि । (आश्चर्यम् । प्रत्युज्जीवितोऽस्मि ।)
( इति पुरुषैः सह निष्क्रान्तः । )

( नेपथ्ये कलकलः । )

(पुनर्नेपथ्ये ।)

एसा अज्जचालुदत्तस्स वहुआ अज्जा धूदा पदे वसणञ्चले विलग्गन्तं दारअं आक्खिवन्ती वाप्फभरिदणअणेहिं जणेहिं णिवारिज्जमाणा पज्जलिदे पावए पविसदि । ( एषार्यचारुदत्तस्य वधूरार्या धूता पदे वसनाञ्चले विलगन्तम् दारकमाक्षिपन्ती बाष्पभरितनयनैर्जनैर्निवार्यमाणा प्रज्वलिते पावके प्रविशति । )

**शर्विलकः**—( आकर्ण्य नेपथ्याभिमुखमवलोक्य । ) कथं चन्दनकः । चन्दनक, किमेतत् ।

**चन्दनकः**—( प्रविश्य । ) किं ण पेक्खदि अज्जो । महाराअप्पासादं दक्खिणेण महन्तो जणसंमद्दो वट्टदि । ( 'एसा'......इत्यादि पुनः पठति । ) कधिदं अ मए तीए, जधा—'अज्जे, मा साहसं करेहि । जीवदि अज्जचारुदत्तो' त्ति । परंतु दुक्खवावुडदाए को सुणेदि, को पत्तिआएदि । ( किं न पश्यत्यार्यः । महाराजप्रासादं दक्षिणेन महाञ्जनसंमर्दो वर्तते । कथितं च मया तस्यै, यथा—'आर्ये, मा साहसं कुरुष्व । जीवत्यार्यचारुदत्तः' इति । परंतु दुःखव्यापृततया कः शृणोति, कः प्रत्ययते । )

**चारुदत्तः**—( सोद्वेगम् । ) हा प्रिये, जीवत्यपि मयि कियेतद्व्यवसितम् । ( ऊर्ध्वमवलोक्य दीर्घं निश्वस्य च । )

न महीतलस्थितिसहानि भवच्चरितानि चारुचरिते यदपि ।
उचितं तथापि परलोकसुखं न पतिव्रते तव विहाय पतिम् ॥ ५५ ॥

( इति मोहमुपगतः । )

**शर्विलकः**—अहो प्रमादः ।

त्वरया सर्पणं तत्र मोहमार्योऽत्र चागतः ।
हा धिक्प्रयत्नवैफल्यं दृश्यते सर्वतोमुखम् ॥ ५६ ॥

**वसन्तसेना**—समस्ससिदु अज्जो । तत्त गदुअ जीवावेदु अज्जाम् । अण्णधा अधीरत्तणेण अणत्थो संभावीअदि । ( समाश्वसित्वार्यः । तत्र गत्वा जीवयत्वार्याम् । अन्यथाधीरत्वेनानर्थः संभाव्यते । )

**चारुदत्तः**—( समाश्वस्य सहसोत्थाय । ) हा प्रिये, क्वासि । देहि मे प्रतिवचनम् ।

**चन्दनकः**—इदो इदो अज्जो । ( इत इत आर्यः । )

( इति सर्वे परिक्रामन्ति । )

( ततः प्रविशति यथानिर्दिष्टा धूता चेलाञ्चलमाकर्षन्विदूषकेणानुगम्यमानो रोहसेनो रदनिका च । )

**धूता**—( सास्रम् । ) जाद, मुञ्चेहि मम् । मा विग्घं करेहि । भीआमि अज्जउत्तस्स अमङ्गलाकण्णणदो । ( जात, मुञ्च माम् । मा विघ्नं कुरुष्व । बिभेम्यार्यपुत्रस्यामङ्गलाकर्णनात् । ) ( इत्युत्थायाञ्चलमाकृष्य पावकाभिमुखं परिक्रामति । )

**रोहसेनः**—माद अज्जए, पडिवालेहि मम् । तुए विणा ण सक्कुणोमि जीविदं धारेदुम् । ( मातरार्ये, प्रतिपालय माम् । त्वया विना न शक्नोमि जीवितं धर्तुम् । ) ( इति त्वरितमुपसृत्य पुनरञ्चलं गृह्णाति । )

**विदूषकः**—भोदीए दाव बम्हणीए भिण्णत्तणेण चिदाधिरोहणं पावं उदाहरन्ति रिसीओ । ( भवत्यास्तावद्ब्राह्मण्या भिन्नत्वेन चिताधिरोहणं पापमुदाहरन्ति ऋषयः । )

**धूता**—वरं पावाचरणे । ण उण अज्जउत्तस्स अमङ्गलाकण्णणम् । ( वरं पापाचरणम् । न पुनरार्यपुत्रस्यामङ्गलाकर्णनम् । )

**शर्विलकः**—( पुरोऽवलोक्य । ) आसन्नहुतवहार्या । तत्त्वर्यतां त्वर्यताम् ।

( चारुदत्तस्त्वरितं परिक्रामति । )

**धूता**—रअणिए, अवलम्ब दारअम्, जाव अहं समीहिदं करेमि । ( रदनिके, अवलम्बस्व दारकम् । यावदहं समीहितं करोमि । )

**चेटी**—( सकरुणम् । ) अहं पि जधोवदेसिणिम्हि भट्टिणीए । ( अहमपि यथोपदेशिन्यस्मि भट्टिन्याः । )

**धूता**—( विदूषकमवलोक्य । ) अज्जो दाव अवलम्बेदु । ( आर्यस्तावदवलम्बताम् । )

**विदूषकः**—( सावेगम् । ) समीहिदसिद्धिए पउत्तेण बम्हणो अग्गदो कादव्वो । अदो भोदीए अहं अग्गणी होमि । ( समीहितसिद्ध्यै प्रवृत्तेन ब्राह्मणोऽग्रे कर्तव्यः । अतो भवत्या अहमग्रणीर्भवामि । )

**धूता**—कधं पच्चादिट्ठम्हि दुवेहिं । ( बालकमालिङ्ग्य । ) जाद, तुमं जेव पज्जवट्ठावेहि अत्ताणं अम्हाणं तिलोदअदाणाअ । अदिक्कन्ते किं मणोरहेहिं । ( सनिःश्वासम् । ) ण क्खु अज्जउत्तो तुमं पज्जवट्ठाविस्सदि । ( कथं प्रत्यादिष्टास्मि द्वाभ्याम् । जात, त्वमेव पर्यवस्थापयात्मानमस्माकं तिलोदकदानाय । अतिक्रान्ते किं मनोरथैः । न खल्वार्यपुत्रस्त्वां पर्यवस्थापयिष्यति । )

**चारुदत्तः**—( आकर्ण्य सहसोपसृत्य । ) अहमेव पर्यवस्थापयामि बालिशम् । ( इति बालकं बाहुभ्यामुत्थाप्य वक्षसालिङ्गति । )

**धूता**—( विलोक्य । ) अम्महे । अज्जउत्तस्स ज्जेव सरसंजोओ । ( पुनर्निपुणं निरूप्य सहर्षम् । ) दिट्ठिआ अज्जउत्तो ज्जेव एसो । पिअं मे पिअम् । ( आश्चर्यम् । आर्यपुत्रस्यैव स्वरसंयोगः । दिष्ट्यार्यपुत्र एवैषः । प्रियं मे प्रियम् । )

**बालकः**—( विलोक्य सहर्षम् । ) अम्मो । आवुको मं परिस्सजदि । ( धूतां प्रति । ) अज्जए, वड्ढवीअसि । आवुको ज्जेव मं पज्जवट्ठावेदि । ( आश्चर्यम् । पिता मां परिष्वजति । आर्ये, वर्धसे । तात एव मां पर्यवस्थापयति । ) ( इति प्रत्यालिङ्गति । )

**चारुदत्तः**—( धूतां प्रति । )

हा प्रेयसि, प्रेयसि विद्यमाने कोऽयं कठोरो व्यवसाय आसीत् ।
अम्भोजिनीलोचनमुद्रणं किं भानावनस्तंगमिते करोति ॥ ५७ ॥

**धूता**—अज्जउत्त, अदो ज्जेव सा अचेतणेत्ति चुम्बीअदि । ( आर्यपुत्र, अतएव साऽचेतनेति चुम्ब्यते । )

**विदूषकः**—( दृष्ट्वा सहर्षम् । ) ही ही भो, एदेहिं ज्जेव अच्छीहिं पिअवअस्सो पेक्खीअदि । अहो सदीए पहावो, जदो जलणप्पवेशव्ववसाएण ज्जेव पिअसमागमं पाविदा । ( चारुदत्तं प्रति । ) जेदु जेदु पिअवअस्सो । ( आश्चर्यं भोः, एताभ्यामेवाक्षिभ्यां प्रियवयस्यः प्रेक्ष्यते । अहो सत्याः प्रभावः यतो ज्वलनप्रवेशव्यवसायेनैव प्रियसमागमं प्रापिता । जयतु जयतु प्रियवयस्यः । )

**चारुदत्तः**—एहि मैत्रेय । ( इत्यालिङ्गति )

**चेटी**—अहो संविधाणअम् । अज्ज, वन्दामि । ( अहो संविधानकम् । आर्य, वन्दे । ) ( इति चारुदत्तस्य पादयोः पतति । )

**चारुदत्तः**—( पृष्ठे करं दत्त्वा । ) रदनिके, उत्तिष्ठ । ( इत्युत्थापयति । )

**धूता**—( वसन्तसेनां दृष्ट्वा । ) दिट्ठिआ कुसलिणी बहिणिआ । ( दिष्ट्या कुशलिनी भगिनी । )

**वसन्तसेना**—अहुणा कुसलिणी संवुत्तम्हि । ( अधुना कुशलिनी संवृत्तास्मि । )

( इत्यन्योन्यमालिङ्गतः । )

**शर्विलकः**—दिष्टया जीवितसुहृद्वर्ग आर्यः ।

**चारुदत्तः**—युष्मत्प्रसादेन ।

**शर्विलकः**—आर्ये वसन्तसेने, परितुष्टो राजा भवतीं वधूशब्देनानुगृह्णाति ।

**वसन्तसेना**—अज्ज, कदत्थम्हि । ( आर्य कृतार्थास्मि । )

**शर्विलकः**—( वसन्तसेनामवगुण्ठ्य चारुदत्तं प्रति । ) आर्य, किमस्य भिक्षोः क्रियताम् ।

**चारुदत्तः**—भिक्षो, किं तव बहुमतम् ।

**भिक्षुः**—इमं ईदिशं अणिच्चत्तणं पेक्खिअ दिउणतले मे पव्वज्जाए बहुमाणे संवुत्ते । (इदमीदृशमनित्यत्वं प्रेक्ष्य द्विगुणतरो मम प्रव्रज्यायां बहुमानः संवृत्तः।)

**चारुदत्तः**—सखे, दृढोऽस्य निश्चयः । तत्पृथिव्यां सर्वविहारेषु कुलपतिरयं क्रियताम् ।

**शर्विलकः**—यथाहार्यः ।

**भिक्षुः**—पिअं णो पिअम् । ( प्रियं नः प्रियम् । )

**वसन्तसेना**—संपदं जीवविदम्हि । ( सांप्रतं जीवापितास्मि । )

**शर्विलकः**—स्थावरकस्य किं क्रियताम् ।

**चारुदत्तः**—सुवृत्त, अदासो भवतु । ते चाण्डालाः सर्वचाण्डालानामधिपतयो भवन्तु । चन्दनकः पृथिवीदण्डपालको भवतु । तस्य राष्ट्रियश्यालस्य यथैव क्रिया पूर्वमासीत्, वर्तमाने तथैवास्यास्तु ।

**शर्विलकः**—एवं यथाहार्यः । परमेनं मुञ्च मुञ्च । व्यापादयामि ।

**चारुदत्तः**—अभयं शरणागतस्य । ( 'शत्रुः कृतापराधः' १०।५४ इत्यादि पठति । )

**शर्विलकः**—तदुच्यतां किं ते भूयः प्रियं करोमि ।

**चारुदत्तः**—अतःपरमपि प्रियमस्ति ।

लब्धा चारित्रशुद्धिश्चरणनिपतितः शत्रुरप्येष मुक्तः
प्रोत्खातारातिमूलः प्रियसुहृदचलामार्यकः शास्ति राजा ।
प्राप्ता भूयः प्रियेयं प्रियसुहृदि भवान्संगतो मे वयस्यो
लभ्यं किं चातिरिक्तं यदपरमधुना प्रार्थयेऽहं भवन्तम् ॥ ५८ ॥

कांश्चित्तुच्छयति प्रपूरयति वा कांश्चिन्नयत्युन्नतिं
कांचित्पातविधौ करोति च पुनः कांश्चिन्नयत्याकुलान् ।
अन्योन्यं प्रतिपक्षसंहतिमिमां लोकस्थितिं बोधय-
न्नेष क्रीडति कूपयन्त्रघटिकान्यायप्रसक्तो विधिः ॥ ५९ ॥

तथापीदमस्तु भरतवाक्यम्—

क्षीरिण्यः सन्तु गावो भवतु वसुमती सर्वसंपन्नसस्या
पर्जन्यः कालवर्षी सकलजनमनोनन्दिनो वान्तु वाताः ।
मोदन्तां जन्मभाजः सततमभिमता ब्राह्मणाः सन्तु सन्तः
श्रीमन्तः पान्तु पृथ्वीं प्रशमितरिपवो धर्मनिष्ठाश्च भूपाः ॥ ६० ॥

इति निष्कान्ताः सर्वे ।

**संहारो नाम दशमोऽङ्कः ।**

---

**समाप्तोऽयं ग्रन्थः ।**

# मृच्छकटिकम्

# NOTES.

—:0:—

## ACT 1.

[ "Act I entitled अलंकारन्यासः Evening of the first-day.—After the prologue, Charudatta, who is within his house converses with his friend मैत्रेय, and deplores his poverty. While they are speaking, Vasantasena appears in the street out-side. She is pursued by the courtier and Samsthanaka: the latter makes her degrading offers of his love, which she indignantly rejects. Charudatta sends Maitreya from the house to offer sacrifice, and through the open door Vasantasena slips unobserved into the house. Maitreya returns after an altercation with Samsthanaka, and recognizes Vasantasena. Vasantasena leaves a casket of gems in the house for safe keeping and returns to her home" R. ]

Every Sanskrit play begins with a नान्दी which consists of one stanza or more in praise of a deity or a Brahman or a king and pronounces at the same time a benediction upon the audience. The नान्दी in the present play consists of two stanzas; the second stanza conveys a hint regarding a portion of the subsequent story. of. 'अत्राप्यम्बुदवदर्थिसन्तापहरश्चारुदत्तो विद्युद्रूपया वसन्तसेनयाऽभिगतः इति काव्यार्थ-सूचनमवधेयम्.' Hence the नान्दी in this play constitutes an अष्टपदा and पत्रावली नान्दी. अष्टपदा and पत्रावली नान्दी are defind in S. D. as;— "आशिर्वचनसंयुक्ता स्तुतिर्यस्मात्प्रयुज्यते। देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता।" "यस्यां मंगल्यशंखचक्राब्जकोककैरवशंसिनी। पदैर्युक्ता द्वादशभिरष्टाभिर्वा पदैरुत" "बीजस्य विन्यासो ह्यभिधेयस्य वस्तुनः। श्लेषेण वा समासोक्त्या नान्दी पत्रावलीति सा."

Stanza I पर्यङ्कः—आसनाविशेषः a particular kind of posture practised by the ascetics in meditation; it is called वीरासन which is defined by Vasistha:—' एकं पादमथैकस्मिान्विन्यस्यारौ तु संस्थितम्। इतरस्मिंस्तथैवोरुं वीरासनमुदाहृतम्,' 'पर्यङ्को वीरासनग्रन्थिरिव (पादोरुसन्धिग्रथितत्वात्) तस्य बन्धाय शैथिल्यपरिहाराय द्विगुणितेन द्विरावेष्टितेन भुजगेनैव आश्लिष्यत इत्याश्लेषः तेन कक्षाबन्धेन संवीतजानोः व्याप्तजानोः' 'स्थिरसुखमासनं' इति योगानुशासनात् मृदुलभुजगभोगेन

द्विगुणावेष्टनं कृतमिति भावः'. संवीत (वे to cover) bound, tied. अन्तः प्राणावरोध &c. 'अन्तः शरीरान्तर्भागे प्राणानां अवरोधेन बहिः प्रसरप्रतिबन्धेन व्युपरतानि निवृत्तानि यानि सकलानि ज्ञानानि (शब्दस्पर्शादिविषयाकाराश्चित्तवृत्तयः) तैर्हेतुभिः रुद्धेन्द्रियस्य असंक्षुभितबाह्याभ्यन्तरकरणस्य.

व्यपगतकरणं adv. modifying पश्यतः—'विश्रान्तबहिरन्तःकरणव्यापारं यथा भवति तथा' करणं an organ of sense 'करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि' cf 'वपुषाकरणोज्झितेन सा निपतन्ती' &c. Raghu VII. 38. for व्यपगतकरणं आत्मानमेवात्मनिपश्यतः cf यद्वै तन्न पश्यति पश्यन्वै तन्न पश्यति नहि द्रष्टुर्दृष्टे र्विपरीलोपो विद्यतेऽविनाशित्वात्। न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत् &c. बृहदारण्यकोपनिषद् IV. 3 The idea is 'in the ultimate merging of selfconsciousness in the highest soul there is no scope left to the sense organs. शून्येन ईक्षणेन निर्विकल्पकसमाधिना घटितः संपादितः यो लयः चित्तैकाग्रता वासना बीजपरिक्षयो वा तेन ब्रह्मणि परमात्मनि लग्नः समाधिः वः सामाजिकान् पातु. With this description compare 'पर्यङ्कबन्धस्थिरपूर्वकायमृज्वायतं संनमितोभयांसं। उत्तानपाणिद्वयसंनिवेशात् प्रफुल्लराजीवमिवाङ्कमध्ये ॥ अवृष्टिसंरम्भमिवाम्बुवाहमपामिवाधारमनुत्तरंगं। अन्तश्चराणां मरुतां निरोधान्निवातनिष्कम्पमिव प्रदीपम् ॥ मनो नवद्वारनिषिद्धवृत्ति हृदि व्यवस्थाप्य समाधिवश्यं। यमक्षरं क्षेत्रविदो विदुस्तमात्मानमात्मन्यवलोकयन्तम् ॥' K. S. III.

"This benediction alludes to the practices and notions of योग in which by abstract meditation (समाधि), the fusion (लय) of individual with universal spirit (ब्रह्मन्) is to be effected, even in the body. Spirit is said to be detached from the *Karanas*, the thirteen products of matter, or महत् intellect; अहंकार consciousness; and the eleven organs of sense and action. The mode of effecting this union is by sitting in particular *asanas* or postures; one of which is sitting on the hams with a cloth fastened round the knees and back (पर्यङ्क-बन्ध-ग्रन्थिः); also by suppression of breath (प्राणावरोधः) by keeping the vision directed either on vacuity or inwardly (शून्येक्षण) and by preventing as vigilently as possible the wanderings of the senses." W. The metre of this verse is स्रग्धरा. 'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्'. This Stanza gives a grand description of an ideal deity and indicates a strong faith in the *yoga* philosophy which, 'in some of the Puranas especially of a Saiva character, is ascribed to Siva who taught it in the person of Sweta, on the Himalaya mountains in the beginning of the Kali age'.

नीलकंठः—Siva is so called because of his dark-blue throat. The colour was the effect of the poison generated at the churning of the ocean which Siva swallowed. The fig. is समस्तवस्तुविषया उपमा 'गरलजनितजगत्सन्तापहरणादम्बुदौपम्यम्', The metre is अनुष्टुप्. For the suggestion conveyed by this verse, see *Supra*.

नान्द्यन्ते—The term नान्दी is applied to the benedictory verse or verses recited as a sort of prologue at the beginning of a drama. The term is variously defined. Bharata's definition आशिर्वचनसंयुक्ता ॥ &c has been quoted above (2) नन्दन्ति देवा अत्र (3) 'नन्दी वृषो वृषाङ्कस्य जगदादौ जगत्पतेः । नृत्यतः कल्पनायोगाज्जगाम किल रङ्गतां । तस्य तद्रूपसंबद्धा पूजा नान्दीति कथ्यते" इत्युक्ता नन्दिसंबन्धिनी पूजा नान्दी (4) नन्दति समृध्यते नाट्यमनया प्रत्युहापोहादिति नान्दी (5) नन्दन्ति काव्यानि कवीन्द्रवर्गाः कुशीलवाः पारिषदाश्च सन्तः ।......तस्मादियं सा कथितेह नान्दी N. P. The words नान्द्यन्ते सूत्रधारः indicate that the drama proper begins, after the नान्दी is recited. It means that after the नान्दी is repeated, सूत्रधार proceeds to let the audience know the name of the play, its subject matter &c.

सूत्रधारः—the principal manager who regulates the thread or rules of the drama (सूत्रं प्रयोगानुष्ठानं धारयतीति or सूत्रं काव्यार्थसूचनं धारयतीति सूत्रधारः) नाट्योपकरणादीनि सूत्रमित्यभिधीयते सूत्रं धारयत्यर्थे सूत्रधारो निगद्यते According to Matriguptacharya, he is चतुरातोद्यनिष्णातोऽनेकभूषासमावृतः । नानाभाषणतत्वज्ञो नीतिशास्त्रार्थतत्ववित् नानागतिप्रचारज्ञो रसभावविशारदः । नाट्यप्रयोगनिपुणो नानाशिल्पकलान्वितः । छन्दोविधानतत्वज्ञः सर्वशास्त्रविचक्षणः । तत्तद्गीतानुगलयकलातालावधारणः ॥ अवधानप्रयोक्ताच योक्तॄणामुपदेशकःएवंगुणगणोपेतः सूत्रधारोऽभिधीयते ॥ इति ॥ Originally the practice was that the नान्दी was to be recited by the Sutradhara and after that the mentioning of the play &c was to be done by the स्थापक; but afterwards, both these functions came to be performed by the Sutradhara, himself. "नान्दीं प्रयुज्य पूर्वस्मिन् सूत्रधारे विनिर्गते । प्रविश्य तद्वदपरः काव्यमास्थापयेन्नटः"

अनेन—नान्दीविस्तरणेन. विमर्दकारिणा प्रतिबन्धावहेन that destroys or stifles (the curiosity &c)—'समयातिपातात्'. The manager then starts with his business which is called प्ररोचना—'कविकाव्यनटादीनां प्रशंसा तु प्ररोचना'. आर्यमिश्रान्—मिश्र is added to show respect 'the respectable gentlemen assembled here.'

मृच्छकटिकं—मृद् 'clay' and शकटिका 'a little cart', 'a toy cart'. 'चारुदत्तपुत्रस्य रोहसेनस्य क्रीडनकं मृण्मयं शकटं षष्ठेऽङ्के वक्ष्यमाणमस्त्यत्र प्रति-पाद्यतयेति मृच्छकटिकं'. It refers to a toy belonging to the child of Charudatta, which plays an important part in the drama. This cart Vasantasena fills with her ornaments, so that Rohasena, Charudatta's son, may have a golden-cart he wished for. The toy thus evinces the fidelity and sentiments of the heroine but becomes the source of unexpected trouble for the hero; it was these ornaments that served as a direct proof of Charudatta's guilt viz. the alleged murder of Vasantasena.

प्रकरणं a species of Rupaka or drama. It is defined as:— भवेत्प्रकरणे वृत्तं लौकिकं कविकल्पितम् । शृङ्गारोऽङ्गी नायकस्तु विप्रोऽमात्योऽथवा वणिक् । सापायधर्मकामार्थपरो धीरप्रशान्तकः । नायिका कुलजा क्वापि वेश्या क्वापि द्वयंक्वचित् । तेन भेदास्त्रयस्तस्य तत्र भेदस्तृतीयकः । कितवद्यूतकारादिविटचेटसंकुलः ॥' S. D. (a species of drama with invented or fictitious plot e. g. our present play, मालतीमाधव, पुष्पभूषित &c. drawn from real life and full of *shringar*, the permanent sentiment. The hero may be a Brahman or minister, or a merchant, and should be noble, brave and of a serene disposition and devoted to the acquirement of धर्म, अर्थ and काम, the objects of worldly existence; the heroine may be a girl of high family or a courtezan or in some places both. It is therefore of three kinds of heroes and heroines.). The main plot of the play is of the poet's creation (or it may be an enlarged and improved edition of the original drama चारुदत्त of Bhasa which contains only four acts) and the under-plot of the Revolution which has an historical foundation is an addition to the play; the addition, however, is of an essential nature ( See Introduction ).

व्यवसिताः—We are prepared or have undertaken.

सुविग्रहः—विग्रह means 'a body' 'गात्रं वपुः शरीर वर्ष्म विग्रहः' of a stately person. द्विजमुख्यतमः—क्षात्रियश्रेष्ठः 'विप्रक्षत्रियविट्-छूद्रा वर्णा-स्त्वाद्या द्विजाः स्मृताः' 'त्रयो वर्णा द्विजातयः'—द्विज here refers to a क्षत्रिय द्विर्जायते इति द्विजः 'जन्मना ब्राह्मणो ज्ञेयः संस्कारैर्द्विज उच्यते hence the word is applicable to a ब्राह्मण, क्षत्रिय, and वैश्य alike. मुख्यतमशब्देन महाकुली-नत्वं व्यज्यते. अगाधसत्वः—of unfathomable virtue or courage. Metre औपच्छन्दासिकः—'पर्यन्ते यौ तथैव शेषमौपच्छन्दसिकं सुधीभिरुक्तम्.'

गणितं Mathematical sciences ( 'mathematics and astrology' ) वैशिकीं ( कलां )—वेशभवां or वेश्यास्थितां—' नेपथ्ये गृहमात्रे च वेशो वेश्यागृहेऽपिच ' the art to be found in the house of a courtezan or in a courtezan; fine arts. Formerly courtezans were the repositories of fine-arts. See दशकुमारचरित II, where among the arts studied are mentioned नृत्य, गीत, वाद्य, नाट्य, चित्र, आस्वाद्य, गन्धकला, पुष्पकला, and द्यूत. हस्तिशिक्षा गजानांविनयनं–the training of elephants. Wilson observes 'it is an accomplishment curiously characteristic of national manners. The proficiency of the Indians in this art early attracted the attention of Alexander's successors'. W. ज्ञात्वा governs the acc. in the first line. शर्व the god Siva 'ईश्वरः शर्व ईशानः शंकरश्चन्द्रशेखरः.' तिमिरं refers to a kind of eyedisease which causes blindness: here it means 'blindness of ignorance'—eyes of knowledge. Siva is propitiated for an attainment of knowledge. Construe शर्वप्रसादात् व्यपगततिमिरे चक्षुषी उपलभ्य (पुनः प्रतिपद्य) शूद्रकोऽग्निं प्रविष्टः 'The Nirnaya Sindhu and other treatises on Hindu law, enumerate self-immolation among acts prohibited in the *kali* age (कलिवर्ज). These works are comparitively modern; hence Wilson concludes that the play must have been written before these acts were codified into law. In रामायण, शरभंग the sage, only delays his creamation until he has seen Rama; after which 'having prepared the fire and offered oblations with the customary prayers, the pious and perfect sage entered the flames (*Aranya Kanda*). Wilson observes, 'The commentator is rather at a loss to explain how the author of the play announces his own death, and is diposed to ascribe it to his prophetic foresight acquired by astrological computation. There can be little doubt, however, that such part of these poems as relates to the personal history of the author is usually the work of another hand.' The metre is स्रग्धरा.

प्रमादशून्यः—सदैव कर्तव्येष्ववहितः. ककुदं the hump of an ox–प्रधानः 'प्राधान्ये राजलिङ्गे च वृषाङ्गे ककुदोऽस्त्रियाम्'–Foremost. पर०–fond of fighting mighty (पर) elephants with his arms in a pugilistic contest. 'परः श्रेष्ठारिदूरान्योत्तरे क्लीबं तु केवले,' 'नागाधिकप्राण इति भावः. The metre is औपच्छन्दसिकम्.

द्विजसार्थवाहः—द्विजः ब्राह्मणः स एव सार्थवाहः वणिक्–जात्या ब्राह्मणः सार्थवाहो वृत्या.—a Brahmin and caravan merchant Construe अस्यां कृतौ (मृच्छकटिकाख्ये प्रबन्धे) with चकार सर्वं किल शूद्रको नृपः. The metre is

